# FOREWORD

*BY*

## HIS EXCELLENCY M. S ANEY

GOVERNOR OF BIHAR.

Pundit Vishveshwar Nath Reu published his first volume of AryaVidhan, Uttarardha (latter half) of his Smriti, last year at the end of the month of Ashadh. In his preface to that work he had promised to present to the learned men his second volume shortly. True to his word, almost to the letter, he has completed his work and is publishing it within a year from that date.

His first volume, dealing mainly with inheritance and succession, has been well received by the learned public and the legal profession and appreciately noticed in the Press by those who are qualified to pronounce an authoritative opinion on this important and unique treatise on Hindu Law in Sanskrit. His Excellency Dr. Kailasnath Katju, Governor of West Bengal, a lawyer and a jurist of great eminence, wrote the foreword to the book. I have no doubt that this second volume will also meet with the same cordial and appreciative reception at the hands of the lawyers and Sanskrit scholars as the first one.

Many eminent Indian lawyers and jurists have written comprehensive works on Hindu Law during the last one hundred years. Some of them are standard works and widely referred to by the lawyers and judges in discussing and deciding points of Hindu Law. As the language of the courts was English during the British rule, all those works were written in English. Pundit Vishveshwar Nath Reu is, so far as I know, the first Indian lawyer to write in Sanskrit a treatise on some of the most

important branches of Hindu Law. Any one who reads this book will have to admit that the learned author has treated the subjects included therein thoroughly, taking special care to introduce into the book the latest changes brought about by judicial decisions and legislation. He has also indicated in an appendix the reforms outlined in the Hindu Code Bill which is pending before the Parliament.

This book will show the readers how the most complex concepts of modern jurisprudence can be [illegible]

proper treatment in books written in English. This special feature of Sanskrit language, viz. its capacity to compress in a few words the sense conveyed in lengthy discussions even in civilized and highly developed languages like English, French, German, etc., should be its strongest recommendation for being the medium of India to express her cultural conceptions to her own children and the rest of the world as well.

Dharma Shastras, their commentaries and the [illegible]

the British rule as that was admittedly the common religious and cultural language of the whole of [illegible] the intro- [illegible] ge by the [illegible] inkers like Dr. Bhagwandas and others realised the importance of retaining Sanskrit as the language of the nation for expression of their ideas and views on matters of cultural and scientific nature. He wrote his famous work Manavadharmasar in Sanskrit. I may bring to the notice of the readers that champions of Ayurvedic system have recently written their works on physiology, anatomy and general system of Ayurveda in Sanskrit. Similarly, the scholars who are out for reform of the Indian

calendar have also compiled their treatises on Indian astronomy in Sanskrit. Sanskrit should be automatically restored to her natural position as the common cultural language of India, now that the British power has disappeared and the English language could not therefore retain its position as a common language of the educated people of the country. No knowledge can form a permanent part of Indian cultural thought unless it is conveyed to the Indians throunh the medium of Sanskrit language. That language is like mother's milk. Thought conveyed through it can be more easily taken in and digested by them. If we want to make an earnest effort for the development of the Indian nation according to its genius, adoption of Sanskrit language as a medium of common cultural thought is essential The experience gained in the past 150 years should be sufficient to convince everyone who thinks seriously that knowledge taught to the people through a medium of language other than Sanskrit has no tendency to take root, grow and mould the thought and actions of the common people. But when it comes, through Sanskrit, it automatically spreads and serves the masses. Philosophic ideas of Shri Shankaracharya, Ramanujacharya, Madhvacharya, Vallabhacharya and other great teachers became popular among the people within a short time. The reason is that they understood exposition in Sanskrit language without much effort as that is the mother language which feeds the Prakrit tongue spoken by them. The process is automatic.

I am, therefore, very glad that the learned author has written his work in easy and elegant Sanskrit. The old Pundits who know the law contained in the Smritis and the Nibandhas had no means so far to know the alterations brought about in the Hindu Law by legislative measures and judicial decisions. The present work will place in their hands the latest version of Hindu Law and will thus help them to know it up to date. It is very necessary that the latest aspect of the Hindu

laws and the tread of modern thought which aims at their further reform should be available to them. The old Pundits with their thorough grasp of the principles of Mimansa and its canons of interpretation, are the proper persons to elucidate the fundamentals underlying the system of Hindu jurisprudence as conceived by the old Rishis and also examine critically the modern innovations in the light of those principles It will give rise to a lively [illegible] discussion which will undoubtedly-ass [illegible] tunity to [illegible] ter- influen[illegible] nes mine [illegible] of fut[illegible]

Pundit Reu's work will certainlly raise the question of the importance of Sanskrit language in the making up of New India. If India wants to progress on lines [illegible] and not have a [illegible] past, Indian State should [illegible] Sanskrit as her cultural language. No other language, foreign or Indian, can take its place.

Before I conclude I thank Pundit Reu for the great regard he showed in asking me to write a foreword to his scholarly work on Hindu Law Pundit Reu's name will be added to the galaxy of those illustrious [illegible] Hindu Law by [illegible] Smritis in the [illegible] those whose names will be cherished by posterity with reverence and gratitude.

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥
( सुभाषितम् )

Ranchi
21-6-49

M. S. Aney

# विहारप्रान्त–शासकेन महामान्येन श्रीमता माधव श्रीहरि अणे महोदयेन लिखिताया भूमिकायाः संस्कृतानुवादः ।

पण्डित विश्वेश्वरनाथ रेउणा स्वनिर्मिताया विश्वेश्वरस्मृतेरुत्तरार्धरूपस्य अस्यार्यविधानस्य प्रथमो भागो गतवर्षापाढान्ते यः प्रकाशितस्तद्भूमिकायां तेन तस्य द्वितीयमपि भागमचिरादेव विद्वत्समाजसमक्षमुपस्थापयितुं प्रतिज्ञातमासीत् । तदेतत् स्वं कथनमक्षरशः पालयता तेन सोऽपि पूर्णतां नीतः । वर्षाभ्यन्तर एव च स तेन प्रकाश्यमानो नयनपथमुपयाति ।

तदीयः स प्रथमो भागो, यत्र प्रायो दायप्राप्तिरुत्तराधिकारश्च विवेचितः, पण्डितवर्गेण वैधानिक-समाजेन च सममानि, प्राशंसि च सामयिकपत्रेषु सम्यक् सविवेचनं संस्कृतभाषालिखिते महत्त्वपूर्णेऽस्मिन्नपूर्वे निबन्धे संमतिदानमसमर्थैरलंकर्मीणैर्विद्वद्भिः । विधानशास्त्रपारीणेनाऽत्युच्चश्रेणीय-व्यवहारविदा मान्यवरेण पश्चिमवङ्गशासकेन डाक्टर-श्रीकैलासनाथ-काटजू-महोदयेन चैतदीयप्रथमभागस्य भूमिका लिखिताऽऽसीत् । विश्वसिमि, तदीयोऽयं द्वितीयोऽपि भागः प्रथमभागवदेव वैधानिकवर्गेण संस्कृतज्ञकोविदकुलेन च सम्यक् साभिनन्दं चादृतो भवितेति ।

अतीतायां शताब्द्यामुत्कृष्टश्रेणीयैर्वाकीलैर्व्यवहारज्ञैश्चार्यविधानविषये समदर्भिषत सुमहान्तः संदर्भाः । तेषु केचनादर्शत्वेनाद्रियन्ते व्यवह्रियन्ते च वाकीलैर्न्यायाधीशैश्च हिन्दूविधानीयविषयविवेचननिर्धारणेषु अतीवाधिक्येन । किन्तु ब्रिटिशराज्ये आंग्लभाषाया न्यायालयीयभाषात्वेन ते सर्वे निबन्धास्तस्यामेव भाषायां व्यलिख्यन्त । यावदहं वेद्मि, पं० विश्वेश्वरनाथ रेउरेव भारतीयेषु विधानशास्त्रस्य प्रथमो विद्वान्, येनार्यविधानसंबन्धिनीषु गौरवास्पदेषु कतिपयासु शाखासु संस्कृतभाषायां लिखितो ग्रन्थः । प्रत्येकेनैतत्पाठकेनेदं मन्तव्यं भविष्यति यदेतस्य लेखकेन निर्दिष्टाः सर्वेऽपि विषया विशदतया व्यविच्यन्त । सुतरामवहितं चात्र तेन; व्यावहारिकनिर्णयैर्न्यायव्यवस्थाभिश्च कृतानि नवीनतमानि परिवर्तनानि

समावेशयितुम्। तेन परिशिष्टे विधानपरिषत्समक्षमुपस्थापितस्य हिन्दूविधानस्य रूपरेखायां समुद्धृतानि संशोधनान्यपि संमुद्रलिख्यन्त।

ज्ञापयिष्यत्येतत्पुस्तकं पाठकान्, यदिदानींतनन्यायव्यवस्थाया जटिलसमस्या अपि पर्याप्तरीत्या याथार्थ्येन च कथं विशदीकर्तुं शक्यन्ते संस्कृतभाषायाम्। अत्रत्येषु कतिपयेषु श्लोकशतकेषु विशदीकृतो विषयो यदीङ्गिलशभाषायां लिख्येत तदा चेन्नाधिकतराणि तर्हि तावन्ति पृष्ठस्थानानि तु अवश्यमेवापेक्ष्येरन। विशिष्टोऽयंगुणः संस्कृतभाषायाः। तत्र (संस्कृते) हीङ्गिलशगिरा, फ्रेंचभारत्या, जर्मनभाषया तादृग्योन्नतपर्याप्तपरिपुष्टया वा कयापि अन्यया भाषया विस्तृतविवेचनाद्वारा विशदीकृत आशयोऽप्यल्पाल्पैः पदन्यासैः संक्षेप्तुं शक्यते। भारतद्वारा स्वबालकानामन्येषां वा परिशिष्ट-संसारिणां हृदयेषु स्वसांस्कृतिकभावना अङ्कयितुं माध्यमत्वेन संस्कृतमेवावलम्बनीयमित्यत्र एष एव सुदृढः प्रमाणलेशः।

इंगिलशराज्यारम्भतः प्राग् व्यापकविषयाणां तदन्तर्गतमुख्यमुख्यविषयाणां वा विवेचकानि सर्वाणि धर्मशास्त्राणि तदवलम्बिना व्याख्यानिबन्धाश्च संस्कृतभाषायामेवाऽलिख्यन्त। यतः सैव तत्कालावधि निखिलभारतसंमता सर्वजनीना धार्मिकी सांस्कृतिकी च भाषासीत्। किन्त्विंग्लैण्डीयैरांग्लभाषायां तत्पदमारोपितायां व्यलुप्यत सैषा पद्धतिः। एवं सत्यपि तदानीं डॉक्टर-श्रीभगवानदासस्तादृशोऽन्ये च दूरदर्शिनो विचारशीला जनाः सांस्कृतिकेषु वैज्ञानिकेषु च विषयेषु स्वं मतं प्रकटीचिकीर्षवः संस्कृतस्यैव राष्ट्रभाषात्वाङ्गीकरणेन स्वं गौरवममन्यन्त। डॉ० श्रीभगवानदासो मानवधर्मसाराभिधानं स्वकीयं ग्रन्थं संस्कृत एव विरचितवान्। अहमेतदपि पाठकेभ्यः सूचयितुमिच्छामि यदायुर्वेदपद्धतिपक्षपातिनः सांप्रतमेव शारीरिकक्रियाशास्त्र-शरीरव्यवच्छेदशास्त्रायुर्वेदसाधारणप्रणालीषु स्वान् ग्रन्थान् संस्कृतभाषायमेव निर्मितवन्तः। इत्थं भारतीय-पञ्चाङ्गसंशोधनव्यापृता विद्वांसोऽपि भारतीयखगोलविद्यासम्बन्धीनि स्वानि पुस्तकान्यपि देववाण्यामेव प्रायेणुः। इदानीं तु लुप्तैवेंग्लिशप्रभुता। अतो नांग्लभाषा साक्षर-समाजस्य संभाषणभाषा भवितुं प्रभवति। अतः संस्कृतभाषा तदीये नैसर्गिके भारतीयसांस्कृतिक-

भाषापदे पुनः स्थापनीया। काचिदपि नाम विद्या भारतीयेभ्यः संस्कृत-भाषामाध्यमद्वारा यदि नो शिक्षिता स्यात्तर्हि सा भारतीयसांस्कृतिक-विचाराणां स्थाय्यङ्गं भवितुं नैव प्रभवेत्। इदं ( संस्कृतं ) हि मातृस्तन्यायते ( भारतीयेभ्यः )। एतद्द्वारा नीयमाना विचारा एभिः (भारतीयैः) अतीव सुग्रहाः सुपचाश्च। यदि वयं भारतीयं राष्ट्रं तत्परम्परानुसारं विकासयितुं सुदृढं व्यवस्येम तर्हि संस्कृतभाषा सर्वजनीन-सांस्कृतिक-विचार-माध्यमत्वेनाऽवश्यं स्वीकारणीया स्यात्। समतीतायाः सार्धशताब्द्या अनुभवो गभीरविचारिणं प्रत्येकं जनमेतद् विश्वासयितुमलंभूष्णुः स्याद् यत्, संस्कृतेतरभाषामाध्यमद्वारा शिक्ष्यमाणं ज्ञानं नैव ( भारतीयानां कृते ) मूलग्रहण-प्रवृत्तये कल्पेत, नैव च परिवृध्य सर्वसाधारणजनस्य विचारान् व्यापारांश्च संस्कर्तुं प्रभवेत्। परं तदेव यदि संस्कृतभाषाद्वाराऽधिगम्येत, तर्हि स्वयं परिवर्धेत जनतां च लाभं नयेत्। श्रीशङ्कर-रामानुज-माधव-वल्लभाचार्याणां तदितरेषामाचार्याणां च दार्शनिका विचारा अचिरेणैव लोकप्रियतां प्राप्ताः, अत्रैतदेव कारणं, यत्ते निरायासविशेषं स्वाशयप्रकटनाय संस्कृतभाषाश्रयमहत्त्वमबुध्यन्त। यतः सैवास्मदीया मातृभाषा; या जनैर्भाष्यमाणां प्राकृतभाषां पुष्णाति। स्वयंसिद्धः किल सर्वोऽप्ययं कार्यक्रमः।

ममायमतीव हर्षो यद् विदुषा ग्रन्थकर्त्राऽयं ग्रन्थो ग्रथितः सुन्दर-सरलया संस्कृतभारत्या। नासादितं किमपि साधनं स्मृतिनिबन्धगतविधानविद्भिः पुरातनविद्वद्भिरद्यावधि विधानव्यवस्थापनकार्यैर्व्यावहारिक-निर्णयैश्च कृतानि परिवर्तनानि ज्ञातुम्। परमेष ग्रन्थोऽधुनाऽलङ्करिष्यति तेषां करकमलं हिन्दूविधानस्य नवीनतमरूपान्तरपरिज्ञापनाय। एवमस्य सांप्रतिकं रूपं ज्ञापयितुं तत्कृतेऽयं ( ग्रन्थः ) साहाय्यं दास्यति। तेषां कृते एतदत्यावश्यकं यदार्यविधानस्य नवीनतमानि रूपाणि भविष्य-संशोधनलब्धया आधुनिकविचारगतीश्च ते जानन्तो भवेयुः। मीमांसासिद्धान्तानां तदर्थनिरूपणनियमानां च ज्ञातारः पुरातना विद्वांस एव प्राचीन-महर्षीणामाधारभूतानि न्यायव्यवस्थापद्धतिमर्माणि प्रकटयितुं प्रभविष्णवस्तन्नियमप्रकाशेनाधुनिक-नियमान् गुणागुणप्रकाशनपूर्वकं परीक्षितुं प्रारभन्ते। तदेनन् तदीयं परीक्षणं सजीवं किन्तु निर्विकारं विचार विमर्शं

जनयिष्यति करिष्यति च भारतीयराष्ट्रभाग्यं प्रभावयितुं लब्धाधिकाराणां यथार्थं निःसंदेहं च जनताया आगामिनीमुन्नतिरूपरेखां निर्धारयितुमुद्यतानां नेतॄणां महायताम्।

रेउ पण्डितस्यायं ग्रन्थो नव्यभारतनिर्माणे संस्कृतभाषामहत्त्वमभ्रमुत्पादयिता। यदीदं भारतवर्षं स्थिरतापथेन चिकीर्षत्युन्नतिम्, दिदृक्षति च स्वकीयामविच्छिन्नताम्, अपिच स्वानीतमनयादचिन्तितमाकस्मिकं च न धाञ्छति विच्छेदम्, तर्हि भारतीयराज्येन संस्कृतं सांस्कृतिकभाषात्वेन स्वीकर्तुं बन्धनीयः परिकरः। नान्या देशीया विदेशीया वा भाषाऽस्याः पदं ग्रहीतुमीष्टे।

एतद्-भूमिका-समापनतः प्राक्-यदहं श्री रेउ पण्डितेन वैदुष्यपुरस्सरं लिखितस्य स्वनिबन्धस्य भूमिकालेखनेन संमानितोऽस्मि, तदर्थं समर्पयामि धन्यवादान्। पण्डितश्रीरेउ-नाम तेषां कीर्तिशालिनां कर्तव्यपरायणानां पूतात्मनां तेजोमये मण्डले संयोक्ष्यते, यैरतीते समये स्मृतिपदव्यपदिष्टैः स्वैर्महद्भिः प्रबन्धैर्हिन्दूविधानानि विरचितानि। अतोऽसावपि महाभागस्तेष्वेकतमो भविष्यति, येषां नामानि भाविनीभिः संततिभिः सादरं सकृतज्ञत्वं च स्मरिष्यन्ते।

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजं भयम्॥

(सुभाषितम्)

राँची
२१-६-४६

एम्. एम्. अणे

## विहार के शासक ( GOVERNOR )

### महामान्य श्रीमान् माधव श्रीहरि अणे
### द्वारा लिखी भूमिका का हिन्दी अनुवाद।

पण्डित विश्वेश्वरनाथ रेउ ने अपनी विश्वेश्वरस्मृति के उत्तरार्धरूप इस आर्यविधान का पहला भाग गत वर्ष आपाढ़ के अंत में प्रकाशित किया था और उस भाग की भूमिका में उसके दूसरे भाग को भी शीघ्र ही विद्वानों को भेंट करने की प्रतिज्ञा की थी। अपने कथन का अक्षरशः पालन करते हुए उन्होंने उसको भी पूरा कर दिया है और वे उसे तब से एक वर्ष के भीतर ही प्रकाशित कर रहे हैं।

उनका यह प्रथम भाग, जिसमें विशेषतया दायप्राप्ति और उत्तराधिकार का विवेचन है, पण्डित वर्ग और कानूनी पेशे वालों द्वारा सम्मानित हुआ है और संस्कृत में लिखे गये हिंदू-विधान के इस महत्त्वपूर्ण और अपूर्व निबंध पर साधिकार संमति देने में समर्थ पुरुषों द्वारा पत्र-पत्रिकाओं में सुन्दर विवेचना के साथ प्रशंसित किया गया है। उस प्रथम भाग की भूमिका पश्चिमी बंगाल के शासक (Governor) महामान्यवर तथा विधानशास्त्र के विद्वान् और अत्युचकोटि के व्यवहारज्ञ डाक्टर कैलासनाथ काटजू ने लिखी थी। मुझे विश्वास है कि उनका यह द्वितीय भाग भी प्रथम भाग के समान ही कानून के विद्वानों और संस्कृत के पण्डितों द्वारा सच्चा और प्रशंसा पूर्ण संमान प्राप्त करेगा।

पिछले सौ वर्षों में बहुत से उच्चकोटि के वकीलों और व्यवहारज्ञों ने हिन्दू कानून के संबन्ध में बड़े-बड़े ग्रंथ लिखे हैं। उनमें से कुछ आदर्शरूप हैं और वकीलों और न्यायाधीशोंद्वारा हिंदू-विधान-संबन्धी विषयों का विवेचन और निर्धारण करने में अत्यधिक उपयोग में लिये जाते हैं। परन्तु अङ्गरेजों के राज्य में न्यायालयों की भाषा अङ्गरेजी होने से वे सब ग्रन्थ अङ्गरेजी में ही लिखे गये हैं। जहाँ तक मुझे ज्ञात है पण्डित विश्वेश्वरनाथ रेउ ही भारतीयों में विधान के पहले विद्वान् हैं, जिन्होंने हिंदू कानून की कुछ विशेष महत्व की शाखाओं पर संस्कृत में पुस्तक लिखी है। इस पुस्तक को पढ़ने वाले प्रत्येक व्यक्ति को अङ्गीकार करना होगा कि इसके विद्वान् लेखक ने पुस्तक में दिये विषयों का विशदरूप से विवेचन किया है और व्यावहारिक निर्णयों और न्यायव्यवस्थाओं द्वारा किये गये नवीनतम परिवर्तनों का भी पुस्तक

में समावेश करने का विशेष ध्यान रक्खा है। उन्होंने परिशिष्ट में विधान-परिषद् के सामने उपस्थित किये हिन्दू कानून के मसौदे में उद्धृत संशोधनों का भी उल्लेख कर दिया है।

यह पुस्तक पाठकों को बतलायगी कि आधुनिक न्यायव्यवस्था की जटिल समस्यायें भी पूर्ण और यथार्थ रूप से संस्कृत में किस प्रकार प्रकट की जा सकती हैं। इसमें जो कुछ कतिपय श्लोकशतकों में लिखा गया है, उसे ठीक तौर से प्रकट करने के लिए अङ्गरेजी में लिखी पुस्तक में अधिक नहीं तो कम से कम उतने ही पृष्ठों की आवश्यकता होगी। संस्कृत भाषा में यह खास गुण है। अर्थात् उसमें अङ्गरेजी, फ्रेंच, जर्मन आदि उन्नत और पूर्णतया परिपुष्ट भाषाओं में लम्बी विवेचनाओं द्वारा प्रकट किये आशय को भी थोड़े से शब्दों में संक्षिप्त किया जा सकता है और यही इस (संस्कृत) के भारत द्वारा अपनी सांस्कृतिक भावनाओं को अपने निजके बालकों और उसी प्रकार बाकी की दुनिया पर प्रकट करने के माध्यम होने का प्रबल प्रशंसापत्र होना चाहिए।

अङ्गरेजों का राज्य होने के पूर्वतक व्यापक विषयों अथवा उनमें के खास-खास विषयों का विवेचन करने वाले सारेही धर्मशास्त्र और उनके आधार पर बनी उनकी व्याख्यायें और निबन्ध संस्कृत में ही लिखे गये थे, क्योंकि वही उस समय तक सारे ही भारत की मानी हुई सर्वजनीन धार्मिक और सांस्कृतिक भाषा थी। परन्तु अङ्गरेजों द्वारा अङ्गरेजी को राज-भाषा का पद दे देने पर वह पद्धति विच्छिन्न होगई। फिर भी उस समय डाक्टर भगवानदास और अन्य दूरदर्शी विचारवान पुरुषों ने सांस्कृतिक और वैज्ञानिक विषयों पर अपना मत प्रकट करने के लिए संस्कृत को ही जनता की भाषा के रूप में कायम रखने का गौरव समझ लिया था। उन्होंने (श्री भगवानदास ने) अपना प्रसिद्ध ग्रन्थ मानवधर्मसार संस्कृत में लिखा था। मैं पाठकों को सूचित करना चाहता हूँ कि आयुर्वेद पद्धति के पक्षपातियों ने हाल ही में शारीरिक-क्रियाशास्त्र, शरीरव्यवच्छेदशास्त्र और आयुर्वेद की साधारण प्रणाली पर अपने ग्रन्थ संस्कृत में ही लिखे हैं। इसी प्रकार भारतीय पञ्चाङ्ग के संशोधन में लगे विद्वानों ने भी भारतीय खगोल-विद्या पर की अपनी पुस्तकें भी संस्कृत में ही लिखी हैं। अब तो अङ्गरेजी सत्ता का लोप हो चुका है, इसलिए अङ्गरेजी भाषा देश के साधारणों की बोलचाल की भाषा होने का अधिकार नहीं रख सकती। अतः संस्कृत को स्वयमेव भारत की सांस्कृतिक भाषा के रूप में उसके नैसर्गिक पद पर फिर से स्थापित कर देना चाहिए। कोई भी विद्या, यदि वह भारतीयों को संस्कृत

भाषा के माध्यम द्वारा न सिखलाई गई हो, तो भारतीय सांस्कृतिक विचारों का स्थायी अङ्ग नहीं बन सकती। यह (संस्कृत) भाषा मातृ-दुग्ध के समान है। इसके द्वारा पहुँचाये हुए विचार उनके (भारतीयों के) द्वारा अधिक सुगमता से ग्रहण किये जा सकते और पचाये जा सकते हैं। यदि हम भारतीय राष्ट्र को उसकी परम्परा के अनुसार ही विकसित करने का गम्भीर उद्योग करना चाहते हैं, तो संस्कृत भाषा को सर्व-जनीन सांस्कृतिक विचारों के माध्यम के रूप में स्वीकार कर लेना आवश्यक है। पिछले १५० वर्षों का अनुभव, गम्भीरता से विचार करने वाले, प्रत्येक व्यक्ति को विश्वास करा देने में पर्याप्त होगा कि वह ज्ञान जो लोगों को संस्कृतेतर भाषा के माध्यम द्वारा सिखाया जाता है जड़ पकड़ने की प्रवृत्ति नहीं रखता अथवा परिवर्धित होकर सर्व-साधारण के विचारों और कार्यों को संस्कृत नहीं कर सकता। परन्तु वही जब संस्कृत भाषा द्वारा प्राप्त होता है, तब अपने आप बढ़ता है और जनता को लाभ पहुँचता है। श्री शङ्कराचार्य, रामानुजाचार्य, माधवाचार्य, वल्लभाचार्य और ऐसे ही अन्य गुरुओं के दार्शनिक विचार थोड़े ही समय में लोकप्रिय हो गये। इसका कारण यही था कि वे बिना विशेष परिश्रम के ही उनको संस्कृत भाषा में प्रकट करने के महत्त्व को समझते थे: क्योंकि वही हमारी मातृ-भाषा है, जो लोगों द्वारा बोली जाने वाली प्राकृत बोली का पोषण करती है। यह (सारा ही) कार्यक्रम स्वयं सिद्ध है।

मुझे विशेष हर्ष है कि विद्वान् ग्रंथकर्ता ने अपना यह ग्रंथ सरल और सुन्दर संस्कृत में लिखा है। स्मृतियों और निबन्धों में रहे विधान के ज्ञाता पुराने पण्डितों के लिए अबतक विधान व्यवस्थापन के कार्यों और व्यावहारिक निर्णयों द्वारा किये गये परिवर्तनों के जानने का कोई साधन नहीं था। परन्तु यह ग्रन्थ उनके हाथों में हिन्दू कानून का नवीनतम रूपान्तर रखेगा और इस प्रकार उन्हें उसके आजकल के रूप को जानने में सहायता देगा। यह अत्यन्त आवश्यक है कि हिन्दू-विधान के नवीनतम रूप और आधुनिक विचारों की गति की, जो उनमें आगे होनेवाले संशोधनों को लक्ष्य रखती है, उन्हें जानकारी होती रहे। मीमांसा के सिद्धान्तों और उसके अर्थनिरूपण के नियमों के ज्ञाता पुराने पण्डित ही प्राचीन ऋषियों की आधारभूत न्यायव्यवस्था पद्धति के गर्भ में रहे मूल तत्त्वों को प्रकट करने वाले और उन नियमों के प्रकाश में आधुनिक नियमों का गुणावगुण विवेचन पूर्वक परीक्षण करनेवाले उपयुक्त व्यक्ति हैं। यह परीक्षण सजीव किन्तु निर्विकार विचारविमर्श

को उत्पन्न करेगा और यह उन नेताओं को, जिनको भारतीय राष्ट्र के भाग्य को प्रभावित करने का अवसर प्राप्त है, भारतीय जनता की आगामी उन्नति की रूप रेखा को अधिक यथार्थता और असंदिग्धता के साथ निश्चित करने में नि:सन्देह सहायता करेगा।

पण्डित रेउ का यह ग्रन्थ अवश्य ही नवीन भारत के निर्माण में संस्कृत भाषा के महत्व के प्रश्न को उत्पन्न करेगा। यदि भारतवर्ष स्थिरता के मार्ग से उन्नति करना चाहता है, अविच्छिन्नता बनाई रखना चाहता है और अपने भूतकाल से अचिन्तित और आकस्मिक विच्छेद नहीं चाहता, तो भारतीय राज्य को संस्कृत को अपनी सांस्कृतिक भाषा के रूप में ग्रहण करने के लिए तैयार हो जाना चाहिए। दूसरी कोई भी देशी या विदेशी भाषा इसका स्थान नहीं ले सकती।

अपनी भूमिका को समाप्त करने के पूर्व मैं पण्डित रेउ को, मुझे अपने विद्वत्ता पूर्वक लिखे हिन्दू-विधान विषयक ग्रन्थ की भूमिका लिखने के लिए कहकर उन्होंने जो मेरे प्रति संमान प्रकट किया है, उसके लिए, धन्यवाद देता हूँ। पण्डित रेउ का नाम उन कीर्तिशाली और कर्तव्य-परायण आत्माओं के प्रभामय मण्डल में सम्मिलित किया जायगा, जिन्होंने भूतकाल में अपने बृहत् प्रबन्धों द्वारा, जो स्मृतियों के नाम से प्रसिद्ध हैं, हिन्दू-विधान का निर्माण किया था। अतः वे भी उनमें से एक होंगे जिनके नाम भावी संतति द्वारा संमान और कृतज्ञता के साथ स्मरण किये जायँगे।

(जिनके यशरूपी शरीर में बुढ़ापे और मृत्यु से उत्पन्न होने वाला भय नहीं है, ऐसे श्रेष्ठ कृतिवाले और रसों की सिद्धि वाले कवीश्वर सदा विजयी रहते हैं।) (सुभाषित)

रॉंची
२१-३-४६

एम० एस० अणे

# प्राक्कथनम् ।

विश्वेश्वरस्मृतेरुत्तरार्धरूपेण रचितस्यास्यार्यविधान ( हिन्दू-कानून )-स्य प्रथमो भागः किञ्चित्कालतः पूर्वमेव पाठकानां संमुख उपस्थापितोऽभूत् । आशास्महि च तदानीं यदनतिचिरेणैवास्य द्वितीयो भागोऽपि कोविदानां करकमलान्यलङ्करिष्यति । दिष्ट्या सेयमाशाद्य परमात्मनोऽनुग्रहेण पूर्तिमगमत् यत् सोऽयं तस्य द्वितीयो भागोऽपि विदुषामग्रे समुपस्थाप्यते ।

यथाहि पश्चिमवङ्गशासकेन ( GOVERNOR ) विश्रुतेन विधानविषयविदुषा श्रीमता कैलासनाथ काटजू महाभागेनास्य प्रथमभागस्य भूमिकां विलिख्य परिवर्धितोऽस्माकमुत्साहस्तथैव विहारप्रान्तशासकेन ( GOVERNOR ) विख्यातेन संस्कृतज्ञशिरोमणिना श्रीमता माधव श्रीहरि अणे महाशयेनास्य द्वितीयभागस्य भूमिकां लिखित्वाऽनुगृहीताःस्मः ।

न केवलमाशास्महे अपि तु विश्वस्मामहे यद् यद्वत्प्रथितैर्विधानविज्ञैः संस्कृतकोविदैश्च समादृतोऽस्य प्रथमो भागस्तद्वदेव एष द्वितीयो भागोऽपि तैः कृपयाऽऽत्मीयीकरिष्यते ।

एवमत्र सहृदयपाठकान्पुनरप्येकवारं प्रार्थयामहे यद् यद्यस्मिन् ग्रन्थे मानवधर्मजं दृष्टिदोषं स्वल्पज्ञताजन्यामशुद्धिमनौचितीं वा कामपि किञ्चिदप्युपलभेरंस्तर्हि तैः कृपया सूचनीया वयं, येन भाविसंस्करणे तत्तत् संशोध्येत ।

सति संभवेऽस्या विश्वेश्वरस्मृतेः पूर्वार्धमपि अविलम्बमेव प्रकाशयितुं प्रयतिष्यामहे ।

जोधपुरम्
आषाढ शुक्ल १५, २००१ वि० सं० } विश्वेश्वरनाथ रेउ ।

ययोर्हि पूज्यपादानां प्रसादाद् रचिता स्मृतिः।
तयोः पित्रोः पदाब्जेषु मयेयं श्रद्धयाऽर्प्यते ॥

जिनके कृपा–प्रताप से स्मृति विरची, स-सनेह।
उन माता–पितु–चरण पे करूं समर्पण एह ॥



श्रीमान् पण्डित मुकुन्दमुरारि रेउ



श्रीमती चान्दरानी रेउ

ययोर्हि पूज्यपादानां प्रसादाद् रचिता स्मृतिः।
तयोः पित्रोः पदाब्जेषु मयेयं श्रद्धयाऽर्प्यते ॥

जिनके कृपा-प्रताप से स्मृति विरची, स-सनेह।
उन माता-पितु-चरण पे करूं समर्पण एह ॥

# प्राक्कथनम् ।

विश्वेश्वरस्मृतेरुत्तरार्धरूपेण रचितस्यास्यार्यविधान ( हिन्दू-कानून )-स्य प्रथमो भागः किञ्चित्कालतः पूर्वमेव पाठकानां संमुख उपस्थापितोऽभूत् । आशास्महि च तदानीं यदनतिचिरेणैवास्य द्वितीयो भागोऽपि कोविदानां करकमलान्यलङ्करिष्यति । दिष्ट्या सेयमाशाद्य परमात्मनोऽनुग्रहेण पूर्तिमगमत् यत् सोऽयं तस्य द्वितीयो भागोऽपि विदुषामग्रे समुपस्थाप्यते ।

यथाहि पश्चिमवङ्गशासकेन ( GOVERNOR ) विश्रुतेन विधानविषयविदुषा श्रीमता कैलासनाथ काटजू महाभागेनास्य प्रथमभागस्य भूमिकां विलिख्य परिवर्धितोऽस्मावमुत्साहस्तथैव विहारप्रान्तशासकेन ( GOVERNOR ) विख्यातेन संस्कृतज्ञशिरोमणिना श्रीमता माधव श्रीहरि अणे महाशयेनास्य द्वितीयभागस्य भूमिकां लिखित्वाऽनुगृहीताःस्मः ।

न केवलमाशास्महे अपि तु विश्रम्भामहे यद् यद्वत्प्रथितैर्विधानविज्ञैः संस्कृतकोविदैश्च समादृतोऽस्य प्रथमो भागस्तद्वदेव एव द्वितीयो भागोऽपि तैः कृपयाऽऽत्मीयीकरिष्यते ।

वयमत्र सहृदयपाठकान्पुनरप्येकवारं प्रार्थयामहे यद् यदस्मिन् ग्रन्थे मानवधर्मजं दृष्टिदोषं स्वल्पज्ञताजन्यामशुद्धिमनौचितीं वा कापि किञ्चिदप्युपलभेरंस्तर्हि तैः कृपया सूचनीया वयं, येन भाविसंस्करणे तत्तत् संशोध्येत ।

सति संभवेऽस्या विश्वेश्वरस्मृतेः पूर्वार्धमपि अविलम्बमेव प्रकाशयितुं प्रयतिष्यामहे ।

जोधपुरम्
आषाढ शु० १५, २००१ वि० सं० } विश्वेश्वरनाथ रेउः

# प्राक्कथन

कुछ समय पूर्व विश्वेश्वरस्मृति के उत्तरार्धरूप से लिखे इस आर्य-विधान ( हिन्दू-कानून ) का पहला भाग पाठकों के सामने रक्खा गया था और आशा प्रकट की गई थी कि इसका दूसरा भाग भी शीघ्र ही विद्वानों के कर-कमलों को भूषित करेगा। हमें हर्ष है कि ईश्वर के अनुग्रह से हमारी वह आशा पूर्ण हुई और इसका यह दूसरा भाग भी विद्वानों के सामने उपस्थित किया जाता है।

जिस प्रकार पश्चिमी बंगाल के शासक ( GOVERNOR ) और कानून के प्रसिद्ध विद्वान् श्रीमान् पण्डित कैलासनाथ काटजू ने इसके पहले भाग की भूमिका लिखकर हमारा उत्साह बढ़ाया था, उसी प्रकार बिहार के शासक ( GOVERNOR ) और संस्कृत के प्रसिद्ध पण्डित श्रीमान् माधव श्रीहरि अणे महाराय ने इसके दूसरे भाग की भूमिका लिख कर कृपा दिखाई है।

हमें केवल आशा ही नहीं किन्तु पूर्ण विश्वास भी है कि जिस प्रकार कानून के विख्यात विद्वानों ने और संस्कृत के प्रसिद्ध पण्डितों ने इस ( आर्य-विधान ) के पहले भाग का आदर किया है उसी प्रकार वे इसके दूसरे भाग को भी अपनाने की कृपा करेंगे।

हम यहां पर एक बार फिर सहृदय पाठकों से निवेदन करते हैं कि यदि इस पुस्तक में मनुष्य-स्वाभाव से होने वाले दृष्टि-दोष से या अल्पज्ञता के कारण कहीं कुछ भी अशुद्ध या अयुक्त प्रतीत हो तो हमें सूचित करने की कृपा करें, जिससे अगले संस्करण में उसका संशोधन कर दिया जाय।

संभव हुआ तो इस विश्वेश्वरस्मृति के पूर्वार्ध को भी शीघ्र ही प्रकाशित करने का प्रयत्न किया जायगा।

जोधपुर
ता० १० जुलाई, १९५१ ई० सं० } विश्वेश्वरनाथ रेउ

| विषय-संख्या | विषयनामानि | श्लोक-संख्या | पृष्ठ-संख्या |
|---|---|---|---|
| | स्वयम्भूरक्षकोऽसंबद्धरक्षकश्च<br>अपने आप बना रक्षक और बिना संबन्धवाला रक्षक | ३५५६ | ५१४ |
| | प्रतीकारोपायाः<br>रोक के उपाय | ३५६७ | ५१५ |
| २५ | भृतिः<br>गुजारा ( जीविका ) | ३५६९ | ५१६ |
| | भृतेरधिकारस्य स्वरूपं परिमाणं च<br>गुजारे के अधिकार का रूप और परिमाण | ३५६९ | ५१६ |
| | भृत्यर्हा जनाः<br>जीविका के योग्य जन | ३५८९ | ५१८ |
| | पत्न्या भृतिः<br>भार्या की जीविका | ३६३९ | ५२५ |
| | विधवाया भृतिः<br>विधवा की जीविका | ३६७४ | ५३० |
| | भृत्याः परिमाणम्<br>जीविका का परिमाण | ३७२८ | ५३७ |
| | कुटुम्बार्थस्य परसात्करणं भृत्यधिकारे तत्प्रभावश्च<br>कुटुम्ब के धन का दूसरे के हाथ में देना और जीविका के अधिकार पर उसका प्रभाव | ३७५६ | ५४१ |
| | कुटुम्बनिवासगृहस्य हस्तान्तरितीकरणं निवासाधिकारे तत्प्रभावश्च<br>कुटुम्ब के रहने के घर का दूसरे के हाथ में देना और उसका रहने के अधिकार पर प्रभाव | ३७६८ | ५४७ |
| | इच्छापत्रेणाऽप्रभावितो भृतेरधिकारः<br>इच्छापत्र से अप्रभावित जीविका का अधिकार | ३८२२ | ५५० |
| | भृतेरधिकारस्य परसात्करणमात्मसात्करणं च<br>जीविका के अधिकार का दूसरे को सौंपना या उस पर अधिकार करना | ३८२३ | ५५० |
| | भृत्यर्थमभियोगः<br>जीविका के लिए मुकद्दमा | ३८२६ | ५५१ |

# आर्यविधानम् ।

( विश्वेश्वरस्मृतेरुत्तरार्धरूपम् । )

## १८ उपहारः ।

इनाम या भेंट ।

एकस्याऽधिकृतेस्त्यागोऽन्यस्यस्वामित्वकल्पनम् ।
उपहारः, परं स स्यात् पूर्णस्त्वन्यप्रतिग्रहात् ॥२२४२॥

एक के अधिकार का त्याग और दूसरे का मालिकपन निश्चित करना उपहार ( gift ) होता है । परन्तु वह ( उस ) दूसरे के ( स्वामित्व के ) ग्रहण करलेने से ( ही ) पूरा होता है ।

मिताक्षराऽनुगाः किंवा दायभागाऽनुगाः पुनः ।
इच्छापत्रोपहाराभ्यां दातुं व्यक्त्यर्थमीशते ॥२२४३॥

मिताक्षरा को मानने वाले या फिर दायभाग को मानने वाले इच्छा पत्र (will) या उपहार (gift) के द्वारा अपना व्यक्तिगत धन ( दूसरे को ) दे सकते हैं ।

भरणाय परं येषां न्यायेनोत्तरदास्तु ते ।
तेषां पोषाय कर्तव्या दानात् पूर्वं विचारणा ॥२२४४॥

परन्तु जिनके भरण-पोषण के लिए वे न्याय से उत्तरदायी हैं, उनके पोषण के लिए दान के पहले ही विचार कर लेना चाहिए । ( अर्थात्—उनके भरण-पोषण का प्रबन्ध पहले ही कर देना चाहिए ।

दायभागीयपृक्तस्तु स्वार्थं पृक्ताऽर्थगं क्षमः ।
अपि दातुमुपर्युक्तविधिना नाऽत्र संशयः ॥२२४५॥

दायभाग को मानने वाला साझेदार तो साझे के धन में के अपने स्वार्थ ( interest ) को भी ऊपर कही विधि से ( इच्छा पत्र या उपहार के द्वारा ) दे सकता है । इसमें सन्देह नहीं है । ( उपर्युक्त विधि से यहां पर आश्रितों के पोषण के प्रबन्ध से तात्पर्य है । अर्थात्—उसे भी पहले उसका प्रबन्ध करना होगा । )

परं मैताक्षरश्चे नाऽवशिष्टः स्यात्कुटुम्बिषु ।
इच्छापत्रोपहाराभ्यां पृक्ताऽर्थं दातुमक्षमः ॥२२४६॥

परन्तु मिताक्षरा को माननेवाला ( साझेदार ) यदि कुटुम्बवालों में ( सब के मरजाने पर ) अकेला बाकी बचा हुआ न हो, तो इच्छा पत्र और उपहार के द्वारा साझे के धन को नहीं दे सकता । ( अर्थात्—सब साझेदारों के मर जाने पर अकेला पीछे रह गया हो, तो वह भी दे सकता है । )

परन्तु जहां खास स्थिति के कारण (उपहृत धन का) अधिकार नहीं दिया जा सकता, वहां पर वह (रजिस्ट्री किया) लेख उपहार (gift) को सिद्ध करने वाला होता है (अर्थात्–उसके आधार पर वह उस धन को पा सकता है।)

पराऽर्पणाय संपत्तेर्नियमा येऽद्य निश्चिताः ।
उपहार उपेक्षाभूदधिकाराऽर्पणस्य तैः ॥२२६३॥

दूसरे को संपत्ति देने के जो नियम आज कल निश्चित किये हैं, उनसे (अर्थात्–१८८२ के Transfer of Property Act से) उपहार में अधिकार सौंपने (के नियम) की आवश्यकता नहीं रही है।

प्रविहाय चले वित्तं नाऽधिकाराऽर्पणं ह्यलम् ।
उपहारे, नवाऽपेक्षा तत्र तस्याऽधुना मता ॥२२६४॥

अचल संपत्ति को छोड़ कर (अन्यत्र) उपहार में अधिकार का सौंपना पर्याप्त नहीं होता (अर्थात्–केवल ऐसा करने से ही काम नहीं चलता।) और आजकल यहां पर (उपहार में) उस (अधिकार सौंपने) की आवश्यकता भी नहीं मानी है।

स्थिरवित्तोपहारेऽद्य दातुर्लेखो भवेदलम् ।
राजपत्राऽङ्कितश्चाऽथ द्वाभ्यां साक्षीकृतः पुनः ॥२२६५॥

अचल संपत्ति के उपहार में आजकल (उपहार) देनेवाले का, रजिस्ट्री किया हुआ और दो (जनों) से साक्षी किया हुआ (witnessed) लेख, पर्याप्त होता है।

चलवित्तोपहारे तद् वित्तस्वाम्यसमर्पणम् ।
राजपत्राऽङ्कितो लेखः पूर्वोक्तो वा भवेदलम् ॥२२६६॥

चल (अस्थिर) संपत्ति के उपहार में उस (उपहार) के धन का अधिकार सौंपना या पहले कहा रजिस्ट्री किया लेख (जिस पर दो गवाहियां हों) पर्याप्त होता है।

ग्रहीतुरुपहारे या स्वीकृतिः प्राक् प्रदर्शिता ।
मिताक्षरामतेनाऽत्र सा मता त्रिप्रकारिका ॥२२६७॥

यहां पर पहले उपहार में जो मिताक्षरा के मत से (उपहार) लेनेवाले की स्वीकृति कही है, वह (स्वीकृति) तीन तरह की मानी गई है।

मानसी वाचिकी शारीरिकी वा नाऽत्र संशयः ।
एतास्वावश्यकी तत्र कतमाऽपि स्फुटा पुनः ॥२२६८॥

मनसे की हुई, जिह्वा से की हुई या शरीर से की हुई (corporeal) इनमें

संशय नहीं है । फिर वहां पर इनमें से कोई सी (एक) प्रकट तौर से आवश्यक है ।

भूमिदाने तु यत्किञ्चित्स्वाम्यस्यार्पणमन्तरा ।
विक्रयोपहृती तस्या दानं चाऽपि न सिध्यति ॥२२६९॥

भूमि के देने में तो थोड़े-बहुत अधिकार के दिये बिना उस (भूमि) का बेचना, उपहार में देना या (अन्य प्रकार से) देना भी सिद्ध नहीं होता ।

स्मृत्युक्तविधिना कर्तुर्मृत्युकालेऽसतः कृते ।
उपहारीकृतं नाऽऽसीन्मान्यं पूर्वं ततः परम् ॥२२७०॥
विधानत्रितयेनैष नियमः परिवर्तितः ।
विधानानामतस्तेषां व्याख्याऽग्रेऽत्र करिष्यते ॥२२७१॥

स्मृतियों में कहे नियमों से कर्ता के मरने के समय अविद्यमान के लिए किया उपहार (gift) पहले मान्य नहीं था; परन्तु बाद में तीन कानूनों से यह बदल दिया गया है । इसलिए उन कानूनों की व्याख्या यहां पर आगे की जायगी ।

नवत्रिनवचन्द्राऽब्दे कर्तुर्विभवमन्यसात् ।
विधिर्यः स्वीकृतस्तस्य द्वितीयाऽध्यायसंगतम् ॥२२७२॥
उपहारीकृतं वित्तं मृतिकालेऽसतः कृते ।
अपि ग्राह्यं यतस्तत्र तदभावो न बाधकः ॥२२७३॥

विक्रम संवत् १९३९ (ई० सं० १८८२) में संपत्ति को दूसरे के अधीन करने (The Transfer of Property Act) का जो कानून स्वीकार किया गया था, उसके दूसरे अध्याय (chapter II) के अनुसार (देनेवाले की) मृत्यु के समय अविद्यमान (पुरुष) के लिए उपहार (gift) में दिया धन भी ग्रहण करने (मानने) लायक होता है, क्योंकि वहां पर उस (लेनेवाले) का न होना रुकावट नहीं डालता ।

परं सार्वत्रिको नैष नियमः किन्तु केवलम् ।
वक्ष्यमाणास्ववस्थासु प्रयोगोऽस्य मतो बुधैः ॥२२७४॥

परन्तु यह नियम सब स्थानों पर काम में आने लायक नहीं है । विद्वानों ने इसका प्रयोग आगे कही जानेवाली अवस्थाओं में ही माना है ।

आखाऽश्वग्रहभूवर्षफाल्गुनाऽद्यचतुर्थिकम् ।
मद्रासवर्जं मद्रासप्रान्ताऽधिष्ठायिहिन्दुभिः ॥२२७५॥
कृतेन वा प्रयोज्येनोपहारेण हि मानवः ।
स्वाऽन्तकालेऽसतेऽप्यत्र स्वधनं दातुमीश्वरः ॥२२७६॥

विक्रम संवत् १९७० की फागुन वदि ४ (२४ फरवरी १९१४) से, मद्रास शहर को छोड़कर, मद्रास प्रान्त में रहनेवाले हिन्दुओं द्वारा किये या (उस समय से)

प्रयोग में आनेवाले उपहार ( gift ) के द्वारा पुरुष यहाँ पर अपने अन्त समय में अविद्यमान ( व्यक्ति ) को भी अपना धन दे सकता है ।

आश्विनस्याङ्कभूवर्षोऽश्विनकृष्णनवम्यथ ।
मद्रासप्रान्तवर्जं तु सर्वत्रैवांग्लभारते ॥२२७७॥
कृतेन वा प्रयोज्येनोपहारेण तु हिन्दवः ।
स्वाऽन्तकालेऽसतेऽप्यत्र स्वधनं दातुमीश्वराः ॥२२७८॥

या विक्रम संवत् १९७३ की क्वाँर वदि ९ ( २० सितम्बर १९१६ ) से, मदास प्रान्त को छोड़कर, सारे ब्रिटिश भारत में किये या ( उस समय से ) प्रयोग में आनेवाले उपहार से हिन्दू लोग अपने अन्त समय में अविद्यमान ( पुरुष ) को भी, यहाँ पर, अपना धन दे सकते हैं ।

आऽश्वाऽश्वनवभूवर्षचैत्रकृष्णचतुर्थिकम् ।
मद्रासन्यायभूवश्यैर्हिन्दुभिर्विहितेन वा ॥२२७९॥
आखाऽश्वनवभूवर्षफाल्गुनाद्यचतुर्थिकम् ।
प्रयोज्येनोपहारेण जनः स्वार्थोऽर्पणे क्षमः ॥२२८०॥

( या ) विक्रम संवत् १९७७ की चैत्र कृष्णा ४ ( ता० २७ मार्च १९२१ ) से मद्रास न्यायालय ( High Court of Madras ) के अधिकार ( Civil Jurisdiction ) में रहे हिन्दुओं द्वारा किये या विक्रम संवत् १९७० की फागुन वदि ४ ( ता० १४ फरवरी १९१४ ) से प्रयोग में आनेवाले उपहार के द्वारा मनुष्य अपना धन दे सकता है ।

वित्तान्यसात्कृतिविधेर्द्वितीयांऽशविचारणा ।
करिष्यते पुरः किन्तु तन्निष्कर्षोऽत्र दीयते ॥२२८१॥

धन को दूसरे के अधीन करने के कानून ( The Transfer of Property Act 1882 ) के दूसरे भाग ( II chapter ) का विचार आगे किया जायगा, परन्तु यहां पर उसका सार दिया जाता है ।

अनुत्पन्नोपहारेऽन्यत् प्राग्दानं चेद् व्यवस्थितम् ।
तर्हि शेषे धने पूर्णमुत्तरस्वाम्यमिष्यते ॥२२८२॥

नहीं पैदा हुए के लिए दिये उपहार में यदि अन्य पहले दान की व्यवस्था करदी हो ( preceded a prior disposition ), तो बाकी रहे धन में उत्तर पुरुष का पूर्ण स्वाम्य आवश्यक होता है । (अर्थात्–यदि 'क' ने एक निधि ( trust ) बनाकर अपना धन 'ख' को सौंप दिया हो और उसके ये नियम रक्खे हों कि–पहले क्रमशः वह और उसकी मनोनीत पत्नी उस धन का उपभोग करेंगे और उनके बाद उनका उस विवाह से होनेवाला बड़ा पुत्र तथा उसके बाद उनका द्वितीय पुत्र, तो यहाँ पर

'क' के बचे धन में ज्येष्ठ पुत्र को पूर्ण स्वाम्य न मिलने से वह अधिकारी न हो सकेगा )।

स्वान्तोत्पन्नकृते स्वेच्छापत्रदानेऽपि पूर्ववत्।
व्यवस्था चेत् कृता तर्हि प्रागवत् स्वाम्यमपीष्यते ॥२२८३॥

अपनी मृत्यु के बाद उत्पन्न होनेवाले के लिये अपने इच्छापत्र द्वारा किये दान में भी यदि पहले की सी व्यवस्था की हो, तो पहले के से अधिकार की भी आवश्यकता होती है। ( अर्थात्—यदि पिताने इच्छापत्र के द्वारा अपनी संपत्ति पहले अपने पुत्र को दी ( bequest की ) हो और उसके बाद उस पर उस पुत्र की स्त्री का हक रक्खा हो और उसकी मृत्यु पर वही संपत्ति अन्य जनों को दी हो, तो पुत्र की स्त्री को संपत्ति पर पूर्ण अधिकार न मिलने से वह दान अन्याय्य समझा जायगा। यहां पर इच्छापत्र लिखनेवाले की मृत्यु पर पुत्र-वधू का अविद्यमान होना मानकर ही उपर्युक्त उदाहरण दिया गया है। )

उपहाराऽनवच्छेदविरोधे नियमास्तु ये।
न तेषां बाधको मान्य उपहारो भवेदिह ॥२२८४॥

उपहारके बराबर चलते रहने के विरुद्ध जो नियम हैं उनका बाधक उपहार यहां मान्य नहीं होता। ( अर्थात्—उपहार देने के समय विद्यमान एक या अनेक पुरुषों के मरने के बाद और उन नाबालिगों के, जो बालिग होकर उस संपत्ति के हकदार हों, बाद उनके उत्तराधिकारियों को नियुक्त करने में ( १८८२ के Transfer of Property Act के अनुसार दिया ) उपहार ( gift ) समर्थ नहीं होता। )

दत्ते कतिपयेभ्यस्तूपहारे ये न संमताः।
प्रागुक्तनियमाभ्यां हि त एव स्युर्बहिष्कृताः ॥२२८५॥

कई पुरुषों को ( क्रमशः ) उपहार देने पर, जो पहले कहे दोनों नियमों से मान्य नहीं हैं, वे ही उपहार से बहिष्कृत होते हैं ( अन्य संमत लोग नहीं होते। )

अनुत्पन्नजनः किन्तु पूर्वोक्ताभ्यां बहिष्कृतः।
नियमाभ्यां तदाऽशक्तस्तदन्त्योऽपि धनग्रहे ॥२२८६॥

परन्तु ( यदि ) नहीं पैदा हुआ पुरुष पहले कहे दोनों नियमों द्वारा ( धनाधिकार से ) बहिष्कृत कर दिया गया हो, तो उसके बाद का पुरुष भी धन प्राप्त करने में असमर्थ हो जाता है।

नव्यन्याये विशिष्टा य उपहारनियामकाः।
नियमास्तेऽत्र संख्याताः संक्षेपेण सुनिश्चितम् ॥२२८७॥

नवीन कानून में उपहार के नियमन करनेवाले जो खास नियम हैं, वे यहां संक्षेप से निश्चयपूर्वक कहे हैं।

उपहर्त्राऽधिकारश्चेदाजीवं रक्षितः स्वयम् ।
भोगायोपहृताऽर्थस्य नोपहारं स नाशयेत् ॥२२८८॥

यदि उपहार देनेवाले ने उपहार में दिये धन के भोग का अधिकार, जीवन पर्यन्त, अपने पास रक्खा हो, तो वह ( अधिकार ) उपहार को नष्ट नहीं करता ( अर्थात्–ऐसा उपहार न्याय्य माना गया है । )

यत्रोपहारे नियमस्तद्विघट्टनबाधकः ।
वाऽविभाज्यत्वनियमैः सोऽनेकार्थं समर्पितः ॥२२८९॥
अमान्यौ नियमौ तत्र पूर्वोक्तौ द्वावपि ध्रुवम् ।
किन्तूपहारो मान्यः स न्यायेनाऽत्र न संशयः ॥२२९०॥

जहां उपहार में उसको नष्ट कर देने में बाधा डालनेवाला नियम हो या वह ( उपहार ) बटवारा न करने के नियम के साथ कई पुरुषों को दिया गया हो, तो वहां निश्चय ही पहले वहे दोनों नियम मानने लायक नहीं होते । परन्तु यहां पर वह उपहार कानून से मान्य होता है, इसमें संशय नहीं है । ( अर्थात्–उपहार प्राप्त करने वाले उसे दे या बांट सकते हैं । ) ( देखो श्लोक २४५३ से २४५५ तक )

भूमौ राजप्रदत्तायां पृथग् नियमतः परम् ।
पाल्याः समस्ता पत्राऽत्र प्रतिबन्धास्तु मानवैः ॥२२९१॥

परन्तु राजा की दी हुई पृथ्वी में, जुदा नियमों (Crown Grant Act 1895) के कारण, पुरुषों को यहां पर सारे ही प्रतिबन्धों ( नियमों ) का पालन करना होता है ।

सकृद्दत्तोपहारस्तूपहर्त्रा स्वस्थचित्ततः ।
स्वातन्त्र्येण च, दात्राऽपि प्रत्यादेश्यस्तु नो मतः ॥२२९२॥

उपहार देनेवाले के द्वारा, स्वस्थ चित्तसे (होश-हवास की दुरुस्ती की हालत में) और स्वतन्त्रता से ( बिना किसी प्रकार के दबाव के ), एकवार दिया हुआ उपहार, देनेवाले से भी रोके ( खारिज किये ) जाने लायक नहीं माना गया है । ( अर्थात्–उपहार देनेवाला भी उसे एकवार देकर वापस नहीं ले सकता । )

विधवोपहृते वित्ते ग्रहीतोपायनस्य हि ।
तस्याः कार्यफलज्ञत्वं प्राप्ते काले प्रमाणयेत् ॥२२९३॥

विधवा स्त्री द्वारा दिये उपहार में उपहार का लेनेवाला ही उस ( स्त्री ) के ( उस ) कार्य के परिणाम के ज्ञान को, समय आने पर, प्रमाणित करे । ( अर्थात्–विधवा स्त्री ने यह काम सोच-समझ के किया है, आवश्यकता पड़ने पर, इसका सिद्ध करना उपहार लेनेवाले का काम होता है । )

द्वान्यर्थमुत्तमर्णानां कृतोपहृतिरत्र चेत् ।
तर्हि तूत्तमर्णरुच्यैव निष्फला सा भवेद्ध्रुवम् ॥२२९४॥

यदि यहां पर कर्ज देनेवालों को हानि पहुँचाने के लिए उपहार दिया गया हो, तो कर्ज देनेवाले की इच्छा से ही, वह ( उपहार ) पूरी तौर से निष्फल ( अमान्य ) हो जाता है।

मृत्युभावनया दत्तोऽप्युपहारस्तु निश्चितम् ।
आर्येषु स्मृतिशास्त्रैर्हि मान्य एव मतो बुधैः ॥२२९५॥

विद्वानों ने, मृत्यु के विचार से ( in contemplation of death ) दिया उपहार भी निश्चय ही, आर्यों में, स्मृति शास्त्रों से, मान्य ही माना गया है।

निक्षेपाऽधिकृतेभ्योऽत्र दानेनाऽधिकृतेः पुरा ।
तत्तुल्या वाऽन्यकृत्याऽपि निक्षेपस्त्वभवद् ध्रुवम् ॥२२९६॥

पहले समय में, यहां पर, निक्षेप ( trust ) के अधिकारियों ( trustees ) को अधिकार दे देने से या उसी तरह के दूसरे कार्य से भी निश्चय ही निक्षेप ( trust ) हो जाता था।

उपहारोऽपि प्रागासीत् शक्यस्तेनैव कर्मणा ।
नवीनन्यायनिक्षेप-विधिरग्रे प्रदर्श्यते ॥२२९७॥

पहले उपहार भी उसी काम से ( अधिकार देने आदि से ) हो सकता था। नवीन कानून का निक्षेप ( trust ) का तरीका आगे दिखाया जाता है।

निक्षेपस्तु भवेद् ग्राह्योऽचलाऽर्थस्य सुनिश्चितः ।
अच्छेदनीयलेखेन राजमुद्राऽङ्कशालिना ॥२२९८॥
स्वयं कर्तु रुताऽनेन न्यस्तानां निधिरक्षिणाम् ।
तयोरन्यतरस्याऽत्र रुचिपत्रेण वा पुनः ॥२२९९॥

स्थिर संपत्ति का निक्षेप ( trust ), निश्चितरूप से, स्वयं निक्षेप करनेवाले के या उसके द्वारा नियुक्त ( उस ) धन की रक्षा करनेवालों ( trustees ) के रद न हो सकनेवाले रजिस्ट्री किये लेख से ग्राह्य ( मान्य ) होता है। या फिर यहां पर उनमें से किसी एक के इच्छापत्र ( will ) से मान्य होता है।

चलाऽर्थस्याऽपि निक्षेपः प्रागुक्तविधिना भवेत् ।
दातृरक्षितृलेखेन रक्षितुः सात्कृतेन वा ॥२३००॥

अस्थिर संपत्ति का भी निक्षेप ( trust ), पहले कही विधि से, देनेवाले (ट्रस्ट करनेवाले ) और उस निधि ( trust ) के रक्षकों के ( पक्के रजिस्ट्री किये ) लेख से या उस संपत्ति के रक्षक ( trustees ) को सौंप देने से होता है।

इच्छापत्रोपहाराभ्यां यस्मै दानमसंभवम् ।
तस्मै कृतोपि निक्षेपो नैव मान्यः कदाचन ॥२३०१॥

इच्छापत्र ( will ) और उपहार ( gift ) के द्वारा जिसको न दिया जा सके उसके लिए किया निक्षेप ( trust ) भी कभी मान्य नहीं होता । ( अर्थात्—जो इच्छापत्र या उपहार के द्वारा धन पा सकता है, उसी के लिए निक्षेप ( trust ) भी किया जा सकता है । )

कर्तुं स्मृतिविरुद्धां हि दायादानां परम्पराम् ।
विहितस्त्वत्र निक्षेपो नो मान्य उपहारवत् ॥२३०२॥

यहां पर हिन्दू शास्त्रों के विरुद्ध हकदारों की परंपरा कायम करने को किया निक्षेप ( trust ), उपहार ( gift ) की तरह ( ही ) मान्य नहीं होता ।

यत्र नव्यविधानस्य नो व्याप्तिस्तत्र घोषणम् ।
निक्षेपस्यैव निक्षेप्तुः स्वाम्यदानमृतेऽप्यलम् ॥२३०३॥

जहां नवीन कानून ( १८८२ के Indian Trust Act ) का प्रभाव नहीं होता, वहां ( ट्रस्टियों को ) अधिकार सौंपे बिना ही, निक्षेप ( trust ) करनेवाले का निक्षेप ( trust ) की घोषणा ( declaration ) करना ही पर्याप्त होता है ।

## १६ इच्छापत्राणि ।

वसीहत ।

साधारण्येन सर्वेऽपि वयःस्थाः स्वस्थमानसाः ।
नियमैर्वक्ष्यमाणैः स्युरिच्छापत्रकृतौ क्षमाः ॥२३०४॥

साधारण तौर पर सारे ही होश-हवासवाले बालिग, आगे कहे जानेवाले नियमों के अनुसार, इच्छापत्र ( will ) करने में समर्थ होते हैं ।

स्वीकृत्यै कामपत्रं यो नयेन् न्यायालये जनः ।
प्रमाणयेत् स एवाऽन्त्यामिच्छां कर्तुस्तु तद्गताम् ॥२३०५॥
कर्तुः स्वतन्त्रतां स्वस्थचित्ततां च यथाविधि ।
तत्सिद्धौ तदलीकत्वसिद्धिर्योत्यभियोक्तरि ॥२३०६॥

जो पुरुष इच्छापत्र को स्वीकृत ( registered ) करवाने के लिए न्यायालय में ले जाय, वही उसमें कर्ता की अन्तिम इच्छा का होना तथा उसके कर्ता का स्वतन्त्र और स्वस्थचित्त होना, कायदे के अनुसार प्रमाणित करे । इन बातों के सिद्ध होने पर उनको झूठा सिद्ध करना मुकद्दमा चलानेवाले (इच्छापत्र का विरोध करनेवाले ) के जिम्मे हो जाता है ।

तत्सिमांतुस्तथाऽऽहर्तुः स्वार्थं तस्मिन् भवेद् यदि ।
कारणानि तथाऽन्यानि सन्देहोत्पादकानि वा ॥२३०७॥
भवेयुः साधयेत्तर्हि तत्राऽऽहर्तृ च निश्चितम् ।
लेखस्य न्याय्यतां कर्तुश्चात्मकर्मफलज्ञताम् ॥२३०८॥

यदि उस (इच्छापत्र) में उसको करनेवाले या लानेवाले का स्वार्थ हो या सन्देह उत्पन्न करनेवाले दूसरे कारण हों, तो वहां पर (उसको न्यायालय की स्वीकृति के लिये) लानेवाला ही, निश्चितरूप से (उस) लेख (इच्छापत्र) के न्याय्य, (न्यायानुमोदित) होने को और (उसके) कर्ता को अपने कार्य के नतीजे की जानकारी होने को सिद्ध करे।

सत्येवं तदनौचित्यं साधयेयुर्विरोधिनः।
अनर्हशक्तिवश्यत्वं कर्तुर्वा तन्निराकृतौ ॥२३०९॥

ऐसा ही जाने पर विरोधी लोग उसके विरोध में उस (will) का अनुचित होना या (उसके) कर्ता का अनुचित दबाव में होना सिद्ध करें।

स्मृतिशास्त्रेषु नोल्लेख इच्छापत्रस्य दृश्यते।
किन्तु तत्कर्तृकं दानं चिरादङ्गीकृतं बुधैः ॥२३१०॥

हिन्दुओं के स्मृतिशास्त्रों में इच्छापत्र का उल्लेख नहीं दिखाई देता। परन्तु उसके द्वारा किया जानेवाला दान विद्वानों ने बहुत समय से अङ्गीकार कर लिया है।

इच्छापत्रेण तत्कर्ता दातुं शक्तो निजं धनम्।
अवयःस्थाय मूढाय विकलायाऽपि निश्चितम् ॥२३११॥

इच्छापत्र के द्वारा उसका करने वाला (पुरुष) अपना धन नाबालिग को, मूढ (idiot) को और विकल को भी निश्चितरूप से दे सकता है। (यहां पर विकल से उस पुरुष का तात्पर्य है, जो शारीरिक विकलता के कारण दायप्राप्ति से वञ्चित हो।)

विधानोक्तवयस्थायुरनवाप्य जनः परम्।
इच्छापत्रकृतौ न स्याच्छक्तो न्यायेन निश्चितम् ॥२३१२॥

परन्तु कानून (ई० सं० १८७५ के Indian Majority Act के तीसरे सैक्शन) में कही बालिग की अवस्था को प्राप्त किये बिना (अर्थात्—नाबालिग) पुरुष कानून से, निश्चित तौर पर, इच्छापत्र के करने में समर्थ नहीं होता।

इच्छापत्रं तदेव स्याद् येन कर्ता निजं धनम्।
स्वमृत्यौ न्यायतो दातुं शक्तोऽन्यस्मै निजेच्छया ॥२३१३॥

इच्छापत्र वही हो सकता है, जिसके द्वारा (उसका) करनेवाला, अपने धन को, अपनी मृत्यु पर, अपनी इच्छा से, कानून के अनुसार दे सके। (इच्छापत्र का लक्षण १९२५ के Indian Succession Act में विशद रूप से दिया है।)

दत्तकाऽऽदानमात्रस्याऽधिकारो यत्र दीयते।
लेखेन न तु संपत्तिरिच्छापत्रं न तद् भवेत् ॥२३१४॥

जहाँ पर लेख में केवल गोद लेने का अधिकार ही दिया जाय, संपत्ति नहीं दी जाय, वह इच्छापत्र नहीं हो सकता।

उपहारेण यद् वित्तं नो दातुं स्याद् जनः क्षमः।
इच्छापत्रिकयाऽप्यत्र तद्दाने सोऽक्षमो मतः ॥२३१५॥

पुरुष जिस धन को उपहार ( gift ) के द्वारा नहीं दे सकता है, उसको, यहां पर, वह इच्छापत्र से देने में भी असमर्थ माना गया है।

भार्यादीनां च पोष्याणां न्याय्यामधिकृतिं पुनः।
हर्तुमेवाऽत्र विहितमिच्छापत्रं न संमतम् ॥२३१६॥

फिर यहां पर भरण-पोषण की हकदार पत्नी आदि के न्याय द्वारा माने हुए ( भरण-पोषण पाने के ) अधिकार को नष्ट करने के लिए ही किया इच्छापत्र (Will) नहीं माना गया है।

इच्छापत्रेण यां दातुं संपत्तिं स्यात् क्षमो जनः।
सा वर्ण्यतेऽथ लोकानामवबोधाय निश्चितम् ॥२३१७॥

पुरुष जिस संपत्ति को इच्छापत्र से दे सकता है, लोगों के जानने के लिए, निश्चितरूप से, उसका वर्णन किया जाता है।

व्यक्तिगां स्वार्जितां चाऽपि संपत्तिं दातुमीश्वरः।
इच्छापत्रेण पुरुषः सर्वत्रैव तु भारते ॥२३१८॥

भारत में सब जगह ही पुरुष इच्छापत्र से व्यक्तिगत ( निजी ) और स्वयं प्राप्त की संपत्ति को दे सकता है।

दायभागमते तातः पैतृकीं च निजार्जिताम्।
इच्छापत्रेण संपत्तिं दातुं शक्तो यथेप्सितम् ॥२३१९॥

दायभाग के मत में पिता इच्छापत्र द्वारा बाप-दादाओं की और अपनी प्राप्त की संपत्ति को अपनी इच्छानुसार देने में समर्थ होता है।

संसृष्टस्थ निजं स्वार्थं संसृष्टार्थगतं पुनः।
इच्छापत्रेण निर्बाधं तत्र दातुं क्षमो मतः ॥२३२०॥

फिर वहाँ पर ( दायभाग में ) साझेदार साझे के धन में रहे अपने स्वार्थ ( interest ) को इच्छापत्र द्वारा, बिना रुकावट के, देने में समर्थ माना गया है।

मिताक्षरामते मासाऽपरसंसृष्टसमतिः।
अपि तातश्च संसृष्ट इच्छापत्रेण न क्षमः ॥२३२१॥
पृक्तं स्वार्थं निजं दातुं यत्तन्मृत्यौ भवेत् कलिः।
आधिपत्येऽपशिष्टानां पत्राऽऽसाधिकृतेश्च नुः ॥२३२२॥

मिताक्षरा के मत में दूसरे साझेदारों की संमति प्राप्त किए हुआ पिता या साझेदार भी इच्छापत्र द्वारा साझे में के अपने स्वार्थ को नहीं दे सकता, क्योंकि इससे उसके मरने पर पीछे रहे साझेदारों के और इच्छापत्र द्वारा अधिकार पानेवाले पुरुष के अधिकार में झगड़ा हो सकता है।

पुनः पृक्ताऽवशिष्टानां स्वाम्यमाद्यं मतं यतः।
लेखाऽऽप्ताऽधिकृतेनुः प्राक् तेषामधिकृतिस्ततः ॥२३२३॥

फिर क्योंकि साझेदारों में पीछे बचे पुरुषों का अधिकार पहला माना गया है, इसलिए उनका अधिकार इच्छापत्र द्वारा अधिकार पाये हुए पुरुष ( के अधिकार ) से पहले होता है।

परं पृक्ताऽवशिष्टस्तु पृक्ताऽर्थं व्यक्तिवित्तवत्।
इच्छापत्रेण तत्राऽपि दातुं प्रभवति ध्रुवम् ॥२३२४॥

परन्तु वहाँ पर भी साझेदारों में पीछे रहा ( अकेला पुरुष ) साझे के धन को निज के धन की तरह इच्छापत्र के द्वारा, निश्चय ही, दे सकता है।

इच्छापत्रप्रभावस्तु तत्कर्तुर्मृत्युवासरात्।
प्रवर्तते ह्यतस्तस्मात्पूर्वं चेद्दत्तकग्रहः ॥२३२५॥
सुतोत्पत्तिरथो गर्भस्तदन्ते पुत्रजन्मदः।
मृतपृक्तसुतोत्पत्तिर्वा तदा तन्निरर्थकम् ॥२३२६॥
मृतसंपृक्तविभव एतेष्वेकतमं पुनः।
यथास्थानं प्रयात्यत्राऽवशिष्टन्यायतो ध्रुवम् ॥२३२७॥
परं म्रियेत चेत् पुत्रो जातो वा दत्तकीकृतः।
प्राङ् मृतेर्धनिनस्तर्हि तत्पत्रं सार्थकं पुनः ॥२३२८॥

इच्छापत्र का असर उसके करनेवाले के मरने के दिन से होता है। इसलिए यदि उसके पहले ( इच्छापत्र करनेवाले द्वारा ) गोद ले लिया जाय, ( इच्छापत्र करनेवाले के ) पुत्र उत्पन्न हो जाय, ( इच्छापत्र करनेवाले द्वारा ) उसके मरने पर पुत्र को जन्म देनेवाला गर्भाधान हो जाय या मरे हुए साझेदार के पुत्र उत्पन्न हो जाय, तो वह ( इच्छापत्र ) निरर्थक ( रद्द ) हो जाता है और मरे हुए पुरुष का साझे का धन मौके के अनुसार इन ( ऊपर गिनाये हुओं ) में से एक को, साझेदारों में से बाकी रहनेवालों के न्याय ( survivorship ) से निश्चय ही मिल जाता है। परन्तु यदि उत्पन्न हुआ पुत्र या गोदलिया पुत्र धन के स्वामी के मरने के पहले ही मरजाय, तो वह इच्छापत्र फिर सार्थक हो जाता है।

प्राग्दत्तकग्रहादिच्छापत्रे चेत्समयस्त्विति।
यत्पूर्वं दत्तकाऽऽदातुर्विधवा मोदयते धनम् ॥२३२६॥

आजीवं मितकालं वा सोऽयमङ्गी कृतः पुनः ।
दत्तकस्य जनित्राऽपि तर्हि मान्योऽत्र रूढितः ॥२३३०॥

यदि गोदलेने के पहले इच्छापत्र में यह शर्त ( agreement ) की गई हो कि पहले गोद लेनेवाले की विधवा स्त्री जीवन पर्यन्त या नियत समय तक धन का उपभोग करेगी और इसे दत्तक के जन्मदाता पिता ने भी स्वीकार कर लिया हो ( अर्थात्-इस शर्त को मान कर ही अपना लड़का गोद दिया हो ), तो वह रिवाज के अनुसार मान्य होता है ।

इच्छापत्रगतः किन्तु समयः स विधानतः ।
रूढ्या च नो मतो दत्त-पुत्रपित्राऽपि संमतः ॥२३३१॥
येन दत्तग्रहाऽन्तेऽन्यः क्रियते तत्सहांऽशभाक् ।
नाऽतो रुक्पत्रकृत् कृतेऽर्थांऽशने दत्त उत्तरी ॥२३३२॥

परन्तु इच्छापत्र में की वह शर्त ( agreement ), जिससे दत्तक लेने के बाद किसी दूसरे को उसका हिस्सेदार बना दिया जाय, दत्तक पुत्र के ( असली ) पिता ने स्वीकार करली हो, तब भी कानून और रिवाज से मान्य नहीं होती । इसलिए इच्छापत्र करनेवाले पुरुष द्वारा किये धन के ( ऐसे ) बटवारे में दत्तक उत्तरदायी नहीं होता । ( अर्थात्-यदि गोद लेनेवाला पिता अपने इच्छापत्र में गोद लेने के बाद अपने धन का कुछ भाग किसी अन्य व्यक्ति या किन्हीं अन्य व्यक्तियों को मिलने या किसी अन्य कार्य में प्रयुक्त होने की शर्त लिख जाय, तो उसके मरने पर उसका दत्तक पुत्र उसके लिए जिम्मेदार नहीं होता । )

यत्र एकाऽवशिष्टोऽपि दद्याद्रुचिपत्रतः ।
एकार्थांऽशं शुभायैकं दत्तकायाऽपरं तथा ॥२३३३॥
विधवायै स्वभार्यायै तृतीयं च तुरीयकम् ।
कुटुम्बिभ्यो न तत्राऽपि दत्तकस्तूत्तरी मतः ॥२३३४॥
दत्तस्य जनकेन प्राक् तदङ्गीकृत्य लेखतः ।
दत्तकत्वे सुतो दत्तो भवेद्यद्यपि निश्चितम् ॥२३३५॥

जहां पर साझेदारों में से पीछे बचा हुआ ( पुरुष ) भी इच्छापत्र के द्वारा साझे के धन का एक भाग कल्याण के लिए, दूसरा दत्तक पुत्र के लिए, तीसरा अपनी विधवा पत्नी के लिए ( इच्छापत्र उसके करनेवाले की मृत्यु के बाद प्रभाव दिखलाता है, इसलिए यहां पर अपनी विधवा पत्नी कहा गया है ) और चौथा ( अन्य ) कुटुम्बियों के लिए दे दे, वहां पर भी यद्यपि दत्तक के जन्म-दाता पिता ने, निश्चय ही, पहले उन ( सब ) शर्तों को लेख द्वारा अङ्गीकार करके पुत्र को गोद दिया हो, तब भी दत्तक पुत्र ( बाद में ) उत्तरदाता ( जिम्मेदार ) नहीं माना गया है ।

पूर्वोक्तविधिना तातः पैतृकाऽल्पांऽशमस्थिरम् ।
उपहर्तुं क्षमः किन्तु नो दातुं रुचिपत्रतः ॥२३३६॥

पहले कही रीति से पिता चल पैतृक धन का थोड़ा सा भाग उपहार में दे सकता है, परन्तु इच्छापत्र से नहीं दे सकता ।

स्त्री स्त्र्यर्थं स्वं क्षमा दातुमिच्छापत्रेण निश्चितम् ।
क्वचित् पुनश्च तत्राऽपि पत्यनुज्ञाऽस्त्यपेक्षिता ॥२३३७॥

स्त्री इच्छापत्र से अपने स्त्री-धन को दे सकती है । फिर कहीं-कहीं उसमें भी पति की स्वीकृति आवश्यक होती है ।

अविभाज्यधनस्याऽपि स्वामीच्छापत्रतः क्षमः ।
तद् दातुं तत्र बाधा चेद् नो रूढ्या नियमेन वा ॥२३३८॥

नहीं बाँटे जानेवाले धन का स्वामी भी इच्छापत्र से उसे दे सकता है, यदि वहां पर रिवाज या नियम से रुकावट न हो ।

सारमेतस्य यद्दातुं साधारण्येन तु क्षमः ।
यद् वित्तमुपहारेण जनो रुक्पत्रतोऽपि तत् ॥२३३९॥

इस ( सब ) का सार ( यह ) है कि साधारण तौर से पुरुष जिस धन को उपहार से दे सकता है, उसको इच्छापत्र से भी दे सकता है ।

क्वचिदस्याऽपवादोऽपि स्मृतिषु ज्ञायते यथा ।
भर्तुर्दायाऽऽगतं वित्तं चलमत्रोपहारतः ॥२३४०॥
दातुं क्षमा मयूखीया विधवा किन्तु सैव नो ।
समर्था रुचिपत्रेण दातुं प्राक् कथितं धनम् ॥२३४१॥

कहीं-कहीं स्मृतियों में इसका अपवाद भी जाना जाता है । जैसे यहां पर 'व्यवहारमयूख' को माननेवाली विधवा पति से दाय ( हिस्से ) में मिले अस्थिर धन को उपहार से दे सकती है; परन्तु वही ( विधवा ) पहले कहे धन को इच्छापत्र से नहीं दे सकती ।

दायभागाऽनुगो दायाद्,भार्यां वञ्चयितुं क्षमः ।
इच्छापत्रेण पुत्रैस्तु भज्यमाने धने निजे ॥२३४२॥

दायभाग को माननेवाला ( पुरुष ) इच्छापत्र से, पुत्रों द्वारा अपने धन के बँटे जाने के समय, अपनी स्त्री को हिस्से से वञ्चित कर सकता है ।

किन्तु सा लभते तत्र भरणायोचितं धनम् ।
भर्तुर्वित्तात् यथोक्तं प्राक् पत्नीभावेन निश्चितम् ॥२३४३॥

परन्तु वह ( स्त्री ) वहां पर पत्नी होने के कारण, पहले कहे अनुसार, पति के धन से भरण-पोषण के लिए उचित धन पाती है ।

